रामकृत्यौडवः स्यात्तु गादिर्वर्ज्यौ रिधौ स्वरौ ।
नारायणी निपादादिरौडवो धपवर्जितः ॥ ४९ ॥

पालिरौडवः षड्जादिर्वर्ज्यौ मध्यमपञ्चमौ ।
एवं प्रधानरागाः स्युर्लक्षणोक्तं यथाक्रमम् ॥ ५० ॥

अनन्ताः सन्ति सन्दर्भा नानादेश्याः प्रकीर्तिताः ।
सङ्कीर्णरूपिणो रागाः सङ्कीर्णा नाम विश्रुताः ॥ ५१ ॥

ब्रह्मा[1] चा (?) पाडवाश्चैव क्षत्रजा औडवास्तथा ।
सम्पूर्णा मुनिजाः प्रोक्ता भरतज्ञैः प्रशंसिताः ॥ ५२ ॥

## अथ पुलिङ्गरागाः ।

वङ्गालः सोमरागश्च श्रीरागश्च तथैव च ।
भूपाली छायगौडश्च शुद्धहिन्दोलिका तथा ॥ ५३ ॥

आन्दोली दोम्बुली चैव गौडः कर्णाटकाह्वयः ।
फडमञ्जी शुद्धनाटी तथा मालवगौलकः ॥ ५४ ॥

रागरङ्गच्छायनाटी रागः कोलाहलस्तथा ।
सौराष्ट्री च वसन्तश्च शुद्धसारङ्गभैरवी ॥ ५५ ॥

रागध्वनिस्तथा ह्येते पुंरागाः परिकीर्तिताः ।
नारदेन विचित्रेण सन्ति नामानि वक्ष्यते (?) ॥ ५६ ॥

## अथ स्त्रीरागाः ।

तुण्डी तुरुष्कतुण्डी च मल्वारी माहुरी तथा ।
पौरालिकी च काम्भारी भल्लाती सैन्धवी तथा ॥ ५७ ॥

सालङ्गाख्या च गान्धारी देवक्री देशिनी तथा ।
वेलावली च वहुली गुण्डक्री घूर्जरी तथा ॥ ५८ ॥

वराटी द्रावडी हंसी गौडी नारायणी तथा ।
अहरी मेघरञ्जी च मिश्रनाटा यथाक्रमात् ॥ ५९ ॥

---

१ °ब्रह्मजाः पा° इति शुद्धः पाठः स्यात् ।

## अथ नपुंसकरागाः ।

कैशिकी ललितश्चैव धन्नाशी च कुरङ्गिका ।
सौराष्ट्री द्रावडी शुद्धा तथा नागवराटिका ॥ ६० ॥
कौमोदकी च रामक्री सावेरी च तथैव च ।
बलहंसः सामवेदी शङ्कराभरणस्तथा ॥ ६१ ॥
नपुंसका इति प्रोक्ता रागलक्षणकोविदैः ।
एतन्मतं नारदस्य ब्रह्मणा कथितं पुरा ॥ ६२ ॥
रौद्रेऽद्भुते तथा वीरे पुंरागैः परिगीयते ।
शृङ्गारहास्यकरुणं (?) स्त्रीरागैश्च प्रगीयते ॥ ६३ ॥
भयानके च बीभत्से शान्ते गायन्नपुंसके ।
अनेन विधिना ज्ञात्वा गेयं सर्वार्थसाधनम् ॥ ६४ ॥
शृणु चान्यं प्रवक्ष्यामि नादं चैव शुभाशुभम् ।
साम्प्रतं मुनिशार्दूल गीतगानविधिं तथा ॥ ६५ ॥
मध्यमादिर्मालवश्री श्रीकापि जयसाक्षिका ।
वराटी घूर्जरी गौडकोलाहलवसन्तकाः ॥ ६६ ॥
धन्नाश्री देशदेशाख्या बङ्गालादित्रयोदश ।
रागाङ्गरागमाख्यातं नारदेन महात्मना ॥ ६७ ॥
भूपालो भैरवश्चैव श्रीरागः फडमञ्जरी ।
वसन्तमालवी नाटबङ्गालाः पुरुषाः स्मृताः ॥ ६८ ॥
वेलावली मलहरी बहुली भूपयोपितः ।
देवक्रिया च पौराली काम्भारी भैरवस्त्रियः ॥ ६९ ॥
श्रीरागपतिकाम्भोजी भल्लाती च कुरङ्गिका ।
देशी मनोहरी तुण्डी पडमञ्जरियोपितः ॥ ७० ॥
सारङ्गनाटनाटाख्या अहरीनाटयोपितः ।
नारायणी च गान्धारी रञ्जी बङ्गालयोपितः ॥ ७१ ॥

---

१ °करुणे स्त्री° इति शुद्धः पाठः स्यात् ।

परादी द्रावडी हंसी वसन्तस्य च योषितः ।
गुण्डक्रिया घूर्जरी च गौडी मालवयोषितः ॥ ७२ ॥
स्त्रीपुंसरागमाख्यातं द्वात्रिंशद्रागसंमतिः ।
अन्ये षट्‌ च पुरुषाः शट्त्रिंशद्गीतपारगैः ॥ ७३ ॥
श्रीरागोऽपि वसन्तश्च भैरवः पञ्चमस्तथा ।
मेघराजस्तु विज्ञेयो नाटनारायणश्च षट्‌ ॥ ७४ ॥
गौडी कोलाहली चैव द्रावल्यान्दोलिकी तथा ।
माधवी देवगान्धारी श्रीरागस्य वराङ्गनाः ॥ ७५ ॥
शुद्धनाटा च सावेरी सैन्धवी मालती तथा ।
त्रोटिकौमोदकी चैव पञ्चमस्य वराङ्गनाः ॥ ७६ ॥
सौराष्ट्री चैव काम्भारी बङ्गाली मधुमाधवी ।
देवक्री चैव भूपाली मेघरागस्य योषितः ॥ ७७ ॥
वल्लभा माधवी चैव विदग्धा चाभिसारिका ।
त्रिवेणी मेघरञ्जी च नाटनारायणस्य च ॥ ७८ ॥
[1]............................................................ ।
............................................................ ॥ ७९ ॥
आयुर्धर्मयशोबुद्धिधनधान्यफलं लभेत्‌ ।
रागाभिवृद्धिसन्तानं पूर्णरागाः प्रगीयते (?)॥ ८० ॥
सङ्ग्रामरूपलावण्यविरहं गुणकीर्तनम्‌ ।
षाडवेन प्रगातव्यं लक्षणं गदितं यथा ॥ ८१ ॥
व्याधिनाशी शत्रुनाशी भयशोकविनाशने ।
व्याधिदारिद्र्यसन्तापे विषमग्रहमोचने ॥ ८२ ॥
कामडम्बरनाशे च मङ्गलं विषसंहृते ।
औडवेन प्रगातव्यं ग्रामशान्त्यर्थकर्मणि ॥ ८३ ॥
मुक्ताङ्गकम्पिताः केचित्केचिदर्धविकम्पिताः ।
केचित्कम्पविहीनाश्चैवेति रागास्त्रिधा कृताः ॥ ८४ ॥

---

1 एकोनाशीतितमश्लोकस्थाने आदर्शपुस्तके त्रुटिचिह्न लिखितं वर्तते । २ °नाशे इति पाठः ...चीनः स्यात्‌ । ३ °मङ्गले इति पाठः अन्वयानुकूलः स्यात्‌ ।

अकम्पाः कम्पसंयुक्ताः सकम्पाः कम्पवर्जिताः ।
यस्तच्छृणोति मूढात्मा तावुभौ ब्रह्मघातकौ ॥ ८५ ॥
विष्णुरूपो भवेत्तालो नादश्चैव शिवात्मकः ।
प्रणवो ब्रह्म चेत्याहुर्गीतशास्त्रविशारदाः ॥ ८६ ॥
तालं धृत्वा प्रमाणेन पश्चाद्गीतं समारभेत् ।
तथा नादं प्रकुर्वीत पश्चाद्गीतं प्रगीयते ॥ ८७ ॥
अनेनैव प्रकारेण गीतमाकर्णयेद्ध्रुवम् ।
तस्य नाभावद्दोषोऽस्ति महापातकतत्समः (?) ॥ ८८ ॥
श्रुतिहीनं च यद्गानं वीणावेण्वादिसम्भवम् ।
यः शृणोति स आप्नोति पातकं दुःखमेव च ॥ ८९ ॥
अपस्वरं कुनादं च श्रुतिहीनं तथाधिकम् ।
यः शृणोति स मूढात्मा पतते नरके चिरम् ॥ ९० ॥
शोकसन्तापदारिद्र्यमायुः क्षीणं भवेद्ध्रुवम् ।
राज्यनाशो मनोदुःखं भवत्येव न संशयः ॥ ९१ ॥
ज्ञात्वा सर्वमिदं शास्त्रं यः शृणोति सदा नृपः ।
आयुरारोग्यमैश्वर्यं लभते वाञ्छितं फलम् ॥ ९२ ॥

इति श्रीनारदकृतौ सङ्गीतमकरन्दे तृतीय-
पादः समाप्तः

---

## सङ्गीताध्याये चतुर्थः पादः ।

### अथ मृदङ्गलक्षणम् ।

दक्षिणाङ्गे स्थितो रुद्र उमा वामे प्रतिष्ठिता ।
शिवशक्तिमयो नादो मर्दले परिकीर्तितः ॥ १ ॥
शिवनादे भवेद्व्याधिः शक्त्या दारिद्र्यमाप्नुयात् ।
द्विर्नादयुक्तः श्रेष्ठश्च श्रुतियुक्तश्च मर्दले ॥ २ ॥
स्त्रीध्वनिः पुरुषाकारः स्त्र्याकारश्चैव पुंस्वरः ।
आयुर्लक्ष्मीहरौ नित्यमश्राव्यौ तावुभौ ध्वनी ॥ ३ ॥

सर्वेषां श्रुतिसंयुक्तमव्यक्तमधुरान्वितम् ।
नादमीदृग्विधं श्रेष्ठमायुर्लक्ष्मीकरं जगुः ॥ ४ ॥
लक्षणं तु मृदङ्गस्य कथ्यते नारदेन च ।
चतुर्विंशतिच्छन्दांसि चर्मग्रन्थीनि तानि च ॥ ५ ॥

## अथ वीणालक्षणम् ।

कच्छपी कुब्जिका चित्रा वहन्ती परिवादिनी ।
जया घोषावती ज्येष्ठा नकुलीष्टेति कीर्तिता (?) ॥ ६ ॥
महती वैष्णवी ब्राह्मी रौद्री कूर्मी च रावणी ।
सारस्वती किन्नरी च सैरन्ध्री घोषका तथा ॥ ७ ॥
दशवीणाः समाख्यातास्तन्त्रीविन्यासभेदतः ।
षट्त्रिंशदङ्गुली वीणा विस्तारः पङ्क्तिरङ्गुलैः ॥ ८ ॥

## अथ वाद्यविशेषः ।

मृदङ्गो दर्दुरश्चैव पणवस्त्वङ्गसंज्ञिकः ।
झर्झरी पटहादीनि शम्भो मुखरिकास्तथा ॥ ९ ॥
शृङ्गं च केहला चेति सुषिरादिप्रकीर्तिताः ।
हरीतक्याकृतिस्त्वन्या एवमाद्यास्ततोर्ध्वगः (?) ॥ १० ॥
आलिङ्गश्चैव गोपुच्छो मध्यदक्षिणवामगः ।
ढक्का डमरुगा मन्द्रा मड्डुझर्झरडिण्डिमाः ॥ ११ ॥
उडुत्रिविधगुञ्जा च कटकाकरणादयः ।
ध्वनिश्च विविधा ज्ञेया नारदेन कृता मताः ॥ १२ ॥

## अथ स्वरादयः ।

नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।
भवन्त्युपासिता नूनं तस्मादेतत्तदात्मकम् ॥ १३ ॥
आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः ।
देहस्था वह्निमहती स प्रेरयति मारुतः ॥ १४ ॥

---

१ °नकुली चेति° इति अथवा 'जयघोषावती ज्येष्ठा नकुल्यष्टेति कीर्तिताः' इति पाठः शुद्धः स्यात् । २ 'काहला' इति सङ्गीतरत्नाकरादिग्रन्थान्तरे दृश्यते ।

इति ग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपदे चरेत् ।
नाभिहृत्कण्ठमूर्धन्येष्वभिधारयते ध्वनिम् ॥ १५ ॥
नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
इति पञ्चविधा धत्ते पञ्चस्थानस्थिताः क्रमात् ॥ १६ ॥
अतिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टस्तथैव च ।
तारश्चेति च विज्ञेयाः पञ्चधा देहजाः स्वराः ॥ १७ ॥
नकारः प्राणमानन्दस्तकारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥ १८ ॥
व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोऽभिधीयते ।
कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ १९ ॥
सूक्ष्मस्वरो हीनसूक्ष्मस्तद्गातुः श्रुतिगोचरः ।
तारः श्रुतिकठोरत्वात्त्याज्य एव न संशयः ॥ २० ॥
अन्यथा विंशतिर्भेदाः श्रवणाः श्रुतयो मताः ।
हृद्गुदानादिसंयुक्ता नादा द्वाविंशतिर्मताः ॥ २१ ॥

## अथ गायकलक्षणम् ।

वाङ्माधुर्योच्यते ज्ञेयं धातुरित्यभिधीयते[1] ।
वाचं गेयं च कुरुते यः स वाग्गेयकारकः ॥ २२ ॥
शब्दानुशासनज्ञानमभिधानप्रवीणता ।
छन्दःप्रभेदवेदित्वमलङ्कारेषु कौशलम् ॥ २३ ॥
[2]रसभापापरिज्ञानं गीतं स्थितिविचिन्वति (?) ।
अशेषभाषाविज्ञानं कलाशास्त्रेषु कौशलम् ॥ २४ ॥
तूर्यत्रितयचातुर्यं हृद्यशारीरशालिता ।
लयतालकलाज्ञानं विवेकोऽनेककाकुषु ॥ २५ ॥
प्रभूतप्रतिभोत्थानं[3] रम्यं सुभगगेयता ।
देशीरागेष्वभिज्ञानं वाक्पटुत्वं सभाजयः ॥ २६ ॥

---

१ 'वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते' इति शुद्धः पाठः स्यात् । २ 'रसभावपरिज्ञानं देशस्थितिषु चातुरी' इति सङ्गीतरत्नाकरे दृश्यते (पृ २४४) । ३ 'प्रभूतप्रतिभोद्भेदभाक्त्वं सुभगगेयता' इति सङ्गीतरत्नाकरस्थः पाठः (पृ २४४) ।

रोषद्वेषपरित्यागी (गः?) साधुत्वमुचितज्ञता ।
अनुद्धतोक्तिसंबद्धो नूत्नधातुविनिर्मकः ॥ २७ ॥
परचित्तपरिज्ञानं प्रबन्धेषु प्रगल्भता ।
द्रुतगीतविनिर्माणं पदान्तरविदग्धता ॥ २८ ॥
त्रिस्थानगमकप्रौढो विविधालसिनैपुणः (?) ।
अवधानगुणैरेभिः परो वाग्गेयकारकः ॥ २९ ॥
विद्धानोऽधिकं चैवं मातृमन्दसुमध्यमः ।
धातृमातृपद्प्रौढः प्रबन्धेष्वपि मध्यमः ॥ ३० ॥
रम्यमातुविनिर्माता अधमो मन्दधातुकृत् ।
वरो यस्तु कविर्वर्णकविर्मध्यम उच्यते ॥ ३१ ॥
कूटकारोऽन्यकारस्तु माधुकारः प्रकीर्तितः ।
मार्गं देश्यं च यो वेत्ति स गन्धर्वोऽभिधीयते ॥ ३२ ॥
यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ।
हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ॥ ३३ ॥
रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गकोविदः ।
प्रबन्धगाननिष्णातो विविधालसितत्त्ववित् ॥ ३४ ॥
सर्वस्थानादिगमकेष्वनायासलसद्गतिः ।
आयत्तकण्ठस्तालज्ञः सावधानो जितश्रमः ॥ ३५ ॥
शुद्धस्थानलयाभिज्ञः सर्वकाकुविशेषवित् ।
अपारस्थायिसञ्चारः सर्वदोषविवर्जितः ॥ ३६ ॥
क्रियापरोचितालापः सुस्वरो धारणान्वितः ।
स्फूर्जनिश्चजनो हारीरहकुद्धचनोदरः (?) ॥ ३७ ॥

---

१ 'रागद्वेषपरित्यागः साधुत्वमुचितज्ञता' इति सङ्गीतरत्नाकरे (पृ. २४४)। २ 'अनुच्छिष्टोक्तिनिर्बन्धो नूत्नधातुविनिर्मितिः' इति सङ्गीतरत्नाकरे। ३ 'त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम्' इति सङ्गीतरत्नाकरे। ४ °गुणैरेभिर्वरो वाग्गेय° इति सङ्गीतरत्नाकरस्थः पाठः। ५ °धिकं धातुं मातुमन्दस्तु मध्यम.° इति सङ्गीतरत्नाकरगत. पाठ.। ६ °धातुमातुविदप्रौढः प्रब° इति सङ्गीतरत्नाकरे। ७ 'कुट्टिकारोऽन्यधातौ तु मातुकारः प्रकीर्तितः' इति सङ्गीतरत्नाकरे। ८ 'स्फूर्जन्निर्जवनो हारिरह कृद्भजनोद्धुर' इति सङ्गीतरत्नाकरे।

सुसम्प्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ।
इत्युक्तमस्तु विज्ञेयो गीतज्ञः प्रतिपादितः ॥ ३८ ॥
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमोत्तमः (मतः ?) ।
महामाहेश्वरेणोक्तः सदोषो गायकाधमः ॥ ३९ ॥
शिक्षाकारोऽनुकारश्च रसिको रञ्जकस्तथा ।
भावकश्चेति विज्ञेया गायकाः पञ्चधा जगुः (?) ॥ ४० ॥
व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलङ्कृतम् ।
समं सुरक्तं श्लक्ष्णं च निकृष्टं मधुरं तथा ॥ ४१ ॥
दिश्यैते स्युर्गुणानं ते (?) तत्र वक्ता (व्यक्तः) स्फुटस्वरः ।
प्रकृतिः श्रुतयश्चोक्तं छन्दोरागपदैः स्वरैः ॥ ४२ ॥
सुसम्पूर्णं च पूर्णाङ्गं प्रसन्नं प्रकटार्थकम् ।
सुकुमारं कण्ठभवं त्रिस्थानोक्तमलङ्कृतम् ॥ ४३ ॥
स्वरवर्णलयस्थानं स्वय(सम ?)मित्युच्यते बुधैः ।
सुरक्तं वल्लकीवंशकण्ठोत्थान्येकतागुणम् (?) ॥ ४४ ॥
नीचोच्चधृतिमध्यादौ श्लक्ष्णता श्लक्ष्णउ(मु)च्यते ।
उच्चैरुच्चारणादुक्तं निकृष्टं भरतादिभिः ॥ ४५ ॥
मधुरं धुर्यलावण्यं पूर्णं जनमनोहरम् ।
दृष्टं लोके न शास्त्रेण श्रुतिकालविरोधि च ॥ ४६ ॥
येनैरुक्तं (?) कलाबाह्यं गतश्रममधोदकम् ।
ग्राम्यं संदिग्धमित्येवं दशधानी तु दुष्टता ॥ ४७ ॥
एवं सङ्गीतशास्त्रज्ञैः कथिता लोकविश्रुताः ।

इति गीतदोषाः ।

षड्ज ऋषभगान्धारौ मध्यमः पञ्चमस्तथा ॥ ४८ ॥
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः ।
षड्जादिस्वरसंमिश्रं गानं च परिकीर्तितम् ॥ ४९ ॥

१ 'भावुकश्चेति गीतज्ञा पञ्चधा गायना जगुः' इति सङ्गीतरत्नाकरे ।

आलापा द्विविधा ज्ञेयाः स्वरसंयोजने तथा ।
रागालप्तिरूपलप्ती द्वयं च परिकीर्तितम् ॥ ५० ॥
रागालप्तिस्तननादि रूपको गीतमुच्यते ।
स्वरे रागाः प्रगीयन्ते शुद्धसालङ्गसंज्ञिकम् ॥ ५१ ॥
यथानुपक्रमेणैव रागः शुद्ध उदाहृतः ।
उपक्रम्य यथा रागो मेलनं सममिश्रकम् ॥ ५२ ॥
पुनस्तन्मार्गगमकं रागरङ्गः प्रकीर्तितः ।
सङ्कीर्णरागमिश्राणां रागः सङ्कीर्ण उच्यते ॥ ५३ ॥
षाडवौडवसंपूर्णरागाः स्युस्त्रिविधास्तथा ।
एकस्वरविहीनस्तु षाडवः परिकीर्तितः ॥ ५४ ॥
पञ्चस्वरसमायुक्त औडवः परिकीर्तितः ।
सप्तस्वरसमायुक्तः सम्पूर्ण इति कथ्यते ॥ ५५ ॥
एवं विवक्ष्यामि समस्तरागान्
गायेत धीमानधिकप्रयत्नः ।
चित्रेण वाकं (?) रभसा स्वरेण
द्वयेन वा दोषविवर्जितः स्यात् ॥ ५६ ॥
षाडवौडवसम्पूर्ण रागा द्वात्रिंशसंमिताः[1] ।
अनन्ताः सन्ति सन्दर्भा नाना देश्यास्तथैव च ॥ ५७ ॥
मन्द्रमध्यमताराद्विस्वरैर्गायेत्त गायकः ।
पूर्णाः पञ्चशता (?) रागाः षाडवा द्विशतास्तथा ॥ ५८ ॥
औडवाः शतसङ्ख्याश्च तत ऊर्ध्वं यथाक्रमम् ।
एवं विज्ञाय भगवान्नारदो मुनिरब्रवीत् ॥ ५९ ॥

इति श्रीनारदकृतौ सङ्गीतमकरन्दे चतुर्थः पादः ।

सङ्गीताध्यायः समाप्तः ।

---

१ °द्वात्रिंशत्संमिताः° इति स्यात् (?)

## अथ नृत्याध्यायो निरूप्यते ।

अनाहतमयीरूपं योगिध्येयं मनोहरम् ।
तद्रूपं च नमस्कृत्य नृत्याध्यायं करोम्यहम् ॥ १ ॥

### आदौ नाट्यशालालक्षणमाह ।

षडशीतिहस्तमात्रचतुरस्रसमन्विता ।
चतुर्विंशतिकस्तम्भनानाचित्रसमन्विता ॥ २ ॥
नानाविकारसम्पन्नप्राकारा चित्रशोभिता ।
चतुरशीतिबन्धाश्च लेखनीया मनोहराः ॥ ३ ॥
रत्नैरनेकैर्विविधैः पट्टवस्त्रैश्च चामरैः ।
पताकतोरणैर्युक्ता चतुर्द्वारादिसंयुता ॥ ४ ॥
मध्ये तु वेदिका रम्या चतुर्विंशतिहस्तका ।
कार्या सर्वगुणोपेता नानापरिमलान्विता ॥ ५ ॥
अनेन विधिना कार्या नाट्यशाला मनोहरा ।
तल्लक्षणं न हि कृतं राज्ञां दोषमवाप्नुयात् ॥ ६ ॥
तस्यां मनोहरं रम्यं सिंहासनमनर्घ्यकम्[1] ।
तदग्रे फलपुष्पाणि स्थापयित्वा विराजितम् ॥ ७ ॥

### अथ सभालक्षणम् ।

विद्वत्कविभटगायकसहास्यहासकज्योतिषवैद्यपौराणिकाः[2] ।
एभिर्नवभिर्युक्ता या सभा राजसभेति तैरुक्ता ॥ ८ ॥
विद्वांसः कवयो भट्टा गायकाः परिहासकाः ।
इतिहासपुराणज्ञाः सभासप्ताङ्गलक्षणम् ॥ ९ ॥

### विद्वल्लक्षणम् ।

सभाजयो वादविचारखण्डनाः
समस्तशास्त्रार्थविचारदक्षकाः ।
कृतानुरागा जनरञ्जने रताः
अमी बुधाः साधुसभाविभूषणाः ॥ १० ॥

---

१ °मनर्घकम्° इति स्यात् । २ इदं पद्यमार्याच्छन्दोवद्भासते, तथापि तल्लक्षणानुगमहीनमेव दृश्यते ।

## अथ कविलक्षणम् ।

शुचिर्दक्षः शान्तः सुजनविनतः सूनृततरः
कलावेदी विद्वानतिमृदुपदः काव्यचतुरः ।
रसज्ञो दैवज्ञः सरसहृदयः सत्कुलभवः
शुभाकारश्छन्दोगुणगणविवेकी स च कविः ॥ ११ ॥

## भटलक्षणम् ।

अनेकभाषासु विशेषबुद्धयो
नृपालवंशावलिकीर्तनक्षमाः ।
प्रबन्धविद्यापठने प्रवीणा
महीशयोग्या मगधा महीतले ॥ १२ ॥

## अथ गायकलक्षणम् ।

षाडवौडवसम्पूर्णगायने जनरञ्जकाः ।
काकुवर्जितशारीरा गायका राजवल्लभाः ॥ १३ ॥

## अथ परिहासकलक्षणम् ।

क्रियाङ्गभाषाङ्गसमस्तवञ्चना-
लसत्प्रसङ्गात्मिकवक्रयुक्तयः ।
प्रस्तावहास्योचितवाग्विलासा
बुधैः प्रशस्ताः परिहासका (के) गुणाः ॥ १४ ॥

## इतिहासज्ञलक्षणम् ।

पुराणैरवशिष्टाद्यैः व्याख्यानकथने क्षमाः(?) ।
इतिहासविदः साक्षाद्गीतवाद्यविचक्षणाः ॥ १५ ॥

## अथ ज्योतिषलक्षणम् ।

प्रतिप्रयाणान्बहुजातकादीन्
ज्ञेयः सुसिद्धान्तविचारदक्षकः ।
ग्रहोपरागादिषु शुद्धलक्षणः
स पण्डितो देवगुरोः समानः ॥ १६ ॥

अथ वैद्यलक्षणम् ।

पाण्डुश्वासकफातिसारविषजाः कर्मज्वरा भूतजाः
प्रेत्योद्रेककफोद्भवा हिमभवा वातानशीतिः क्रमात् (?) ।
तिस्रो वैद्यकसंहितासु निपुणः शास्त्रेषु बोधात्मवान्
दृष्टस्पृष्टविचित्ररोगहरणः सद्वैद्यधन्वन्तरिः ॥ १७ ॥

अथ पुराणिकलक्षणम् ।

आलापोक्तिषु चातुर्यं श्रुतिज्ञः सर्वशास्त्रवित् ।
पौराणिकः पुराणेषु कुशलः कथितो बुधैः ॥ १८ ॥

अथ सभापतिलक्षणम् ।

अनेकशृङ्गारविचित्ररूपः
सर्वज्ञचातुर्यरसान्वितोऽसौ ।
सङ्गीतसाहित्यकलानुरक्तो
निर्मत्सरो वाक्सुगुणैरुपेतः ॥ १९ ॥
तद्वामपार्श्वेऽपि पुराणभट्टाः
तद्दक्षिणेऽमात्यपुरोहिताश्च ।
तत्पृष्ठभागेऽपि च कोपरक्षकः
समीपविद्वत्कविवान्धवैर्युतः ॥ २० ॥
ततः सुविद्यावहुलक्षणान्वितः
कालप्रवीणो बहुजातकादिमत् (?) ।
ततो भिषग्दैवविदौ समीपे
संस्थापयेद्दक्षिणकोविदैः क्रमात् ॥ २१ ॥
महीशवामे वरमन्त्रिमण्डलं
संस्थापयेत्सैन्यपतिं क्रमाच्च ।
पार्श्वोभयोर्वन्दिभटप्रवीणा[1]
शृङ्गारगानज्ञवरान्कवींश्च ॥ २२ ॥

1 °प्रवीणान्° इति शुद्धः पाठः स्यात् ।

विलासिनोऽन्तःपुरतो विसारिणः
स्वकङ्कणैः कूजितकिङ्किणीरवैः ।
अतिस्वरूपा बहुवल्गुभाषिणः
स चामराः पार्श्वगता विरञ्जिताः ॥ २३ ॥
डोलचामरकराग्रवर्तिनो
वैरविवेककविवाद्यकारकाः (?) ।
सर्वशास्त्रदनुरक्षकादयः
पार्श्ववर्त्तिननिरीक्षणोक्तयः (?) ॥ २४ ॥

## (अथ) नटविशेषः ।

चतुर्धाभिनयाभिज्ञो नटो भाषाविवेकवित् ।
नर्तनः सूरिभिः प्रोक्तो मार्गनृत्यकृतश्रमः ॥ २५ ॥
अनुभावविभावजानता
रसभावादिकरञ्जकश्रियः ।
नटभावविवेकबन्धनो
रचिताकालविभेददेशिकः ॥ २६ ॥

## अथ घर्घरिकः ।

विभ्रन्मुण्डशिखाविलिप्तविभवो भस्माङ्गशारीरको
विभ्रद्घर्घरिकाश्च पेशलकलातालप्रवीणस्तथा ।
पञ्चाङ्गे कुशलो (लः) सभापति ..............
घर्घर्याः पटुदीर्घकाललगमास्तालज्ञकैर्वर्णिताः ॥ २७ ॥

## अथ पात्रलक्षणम् ।

समेलनैः सर्वकलासुशोभितै-
रनेकवस्त्राभरणैरलङ्कृतैः ।
उपाङ्गतालाङ्गमृदङ्गचातुरैः
समेत्य पात्रा जवनीतटे स्थिताः ॥ २८ ॥

---

१ अस्मिन् रथोद्धतावृत्तपादे आद्यगुर्वक्षरस्थाने लघुद्वयप्रयोगात् छन्दोभङ्गः स्फुटः । २ आदर्शपुस्तके त्रुटितोऽयमंशः ।

सा चित्रिणी शङ्खिनिहस्तिनी क्रमात्
सा पद्मिनी रूपविलाससंभ्रमाः ।
आबालतारुण्यविदग्धयौवना
बिम्बाधरा शोभितचन्द्रिकाननाः ॥ २९ ॥
पीनोन्नतोत्तुङ्गकुचाभिशोभिताः
सकञ्चुका रत्नविचित्रभूषणाः ।
तद्रम्यरूपाः कुचकुम्भशोभिता
विचित्रहारा मणिमौक्तिकैर्युताः ॥ ३० ॥
सपादहस्ताब्जमुखाब्जरेखाः
सलक्षणा युक्तकपोलरम्याः ।
कुचौ विशालौ मृदुवेणिभेदाः
पुष्पाण्यलङ्कृत्य मनोहराणि ॥ ३१ ॥
लज्जान्विता मृदुवचो (?) बहुनृत्यगीता
लावण्यहंसगमना बहुलास्ययुक्ताः ।
गन्धर्वशास्त्रनिपुणा रमणाश्च रम्भा-
तिलोत्तमा और्वशिमेनका मताः (?) ॥ ३२ ॥
राज्यर्पिता दृष्टिरमोघयौवना
विद्याकलारागसुगर्वरञ्जकाः ।
पुष्पाञ्जलिं दापयितुं समारभे-
द्रङ्गप्रदेशं प्रति लज्जितागताः ॥ ३३ ॥
अङ्गेनालम्बयेद्गीतं हस्तेनार्थं प्रदर्शयेत् ।
नेत्राभ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः ॥ ३४ ॥
एवं भावमनो धृत्वा पुष्पाञ्जलिपुरःसरम् ।
महीन्द्रस्य समीपाग्रे रङ्गपीठे समर्पयेत् ॥ ३५ ॥
हस्तपात्रेऽर्पितकुचौ कटौ विप्रणिताकृती ।
नेत्रजातिसमेत्यैवं नीराजनकृतां नृपम् (?) ॥ ३६ ॥

## अथ पुष्पाञ्जलिः ।

ब्रह्मा तालधरो हरिश्च पटही वीणाकरी भारती
वंशज्ञौ शशिभास्करौ श्रुतिधराः सिद्धाप्सराः किन्नराः ।
नन्दीभृङ्गिरिटादिमर्दलधराः सङ्गीतको नारदः
शम्भोर्नृत्तकरस्य मङ्गलतनोर्नाट्यं सदा पातु नः ॥ ३७ ॥
लक्ष्मीस्ते सदने सदा निवसतां चित्ते च चिन्तामणिः
स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव ।
वाणी ते वदने दया नयनयोर्दानं करे तेऽन्वहं
विष्णुश्चेतसि ते मतिश्च सुकृते कीर्तिश्च लोकत्रये ॥ ३८ ॥
इन्दुं कैरविणीव कोकपटलीवा[1]म्भोजिनीबान्धवं
मेघं चातकमण्डलीव मधुपश्रेणीव पद्माकरम् ।
माकन्दं पिकसुन्दरीव रमणीवात्मेश्वरं प्रोषितं
चेतोवृत्तिरियं मम क्षितिपते त्वां द्रष्टुमुत्कण्ठते ॥ ३९ ॥
इति पूर्वपुष्पाञ्जलिः ।

## अथ पञ्चतालोत्पत्तिनिरूपणमाह ।

सदाशिवमुखोद्भूतास्तालाः पञ्चविधाः स्मृताः ।
सद्योजातमुखात्पूर्वमृग्वेदादुद्भवस्तथा ॥ ४० ॥
तस्माच्चश्चत्पुटो ज्ञेयः कान्तिर्गोक्षीरवर्णकः ।
ब्रह्मजातिसमाख्यातो गोपुच्छ इति संज्ञकः ॥ ४१ ॥
वामदेवे दक्षिणे च मुखे याजुपसम्भवम् ।
तस्माच्चाश्चपुटाख्यं (?) हि तालः क्षत्रियजातिकः ॥ ४२ ॥
पिपीलिका इति ज्ञेया वर्णकुङ्कुमकेसरी ।
दक्षिणे यजुषामाहुर्नारदेन प्रकीर्तितः ॥ ४३ ॥
अघोरे पश्चिमे संज्ञे मुखे जातो ह्याथर्वणः ।
पद्भितापुत्रकस्तालस्तस्मादुद्भवयिष्यते (?) ॥ ४४ ॥
वैश्यजातिरिति प्रोक्तः कनकाभ इति स्मृतः ।
मुरजा इति नामाख्यं नारदेन प्रशंसितम् ॥ ४५ ॥

---
[1] °पटलीवा° इति समीचीनः पाठः स्यात् ।

तत्पुरुषेत्युत्तरे च मुखे सामवेदोद्भवं तथा ।
सम्पद्वेष्टिकतालोऽयं तस्मात्सम्भवमुच्यते (?) ॥ ४६ ॥
गान्धर्वमिति संज्ञं च मणिवर्णप्रशंसितम् ।
रिगमा इति संज्ञं तु ऋषिभिः प्रतिपादितम् ॥ ४७ ॥
ईशानोर्ध्वमुखे जातः शास्त्रागमसमन्वितः ।
तस्मादुद्भव उद्घट्टस्तालोऽयं नामतः क्रमात् ॥ ४८ ॥
नानाजातिर्नीलवर्णो यतिः समबलिः क्रमात् ।
रुद्रपञ्चमुखेभ्यश्च तालाः पञ्चविधा मताः ॥ ४९ ॥
ब्रह्महा च सुरापानी स्वर्णस्तेयी च तल्पगः ।
तत्संयोगी पञ्चमश्च येऽतिपातकिनः स्मृताः ॥ ५० ॥
तद्दोषपरिहारार्थं प्रायश्चित्तमुदीरितम् ।
गणैर्नन्दीश्वराद्यैश्च ऋषिभिर्नारदादिभिः ॥ ५१ ॥
आदितालादितालानामेकोत्तरशतं क्रमात् ।
शृण्वतां पातकहरं राज्ञां क्रतुफलं लभेत् (?) ॥ ५२ ॥
राज्याभिवृद्धिसन्तानं रणे शत्रुविनाशनम् ।
सौभाग्यारोग्यमतुलं कामशास्त्रविवर्धनम् ॥ ५३ ॥
लास्याङ्गे संपरिज्ञानं कलावेदिनमुत्तमम् (?) ।
सर्वसङ्गीतसुभगं नृपाणां कीर्तिवर्धनम् ॥ ५४ ॥

इति श्रीनारदकृतौ सङ्गीतमकरन्दे नृत्ताध्याये नाट्यशालासभासभापतिपात्रपुष्पाञ्जलिपञ्चतालोत्पत्तिनिरूपणं नाम प्रथमः पादः ।

---

## नृत्याध्याये द्वितीयः पादः ।

सदाशिवो हरिर्ब्रह्मा भरतः कश्यपो मुनिः ।
मतङ्गो यष्टिकश्च दुर्गा च शक्तिशार्दूलकोहलाः ॥ १ ॥
हनूमांस्तुम्बुरुश्चैव अङ्गदश्चैव नारदः ।
एते साहित्यसर्वज्ञा बुधास्तालान्प्रचक्रमुः ॥ २ ॥

## एकोत्तरशतताला उच्यन्ते ।

चञ्चत्पुटश्चाचपुटः षट्पितापुत्रकस्तथा ।
सम्पद्वेष्टिक उद्धट्ट आदितालश्च दर्पणः ॥ ३ ॥
चर्चरी सिंहलीलश्च कन्दर्पः सिंहविक्रमः ।
श्रीरङ्गो रतिलीलश्च रङ्गतालः परिक्रमः ॥ ४ ॥
हंसलीलो वर्णभिन्नो राजचूडामणिस्तथा ।
प्रत्यङ्गो गजलीलश्च त्रिभिन्नो वीरविक्रमः ॥ ५ ॥
रङ्गद्युतो राजतालः सिंहविक्रीडितस्तथा ।
वनमाली वर्णतालस्ततो रङ्गप्रदीपकः ॥ ६ ॥
हंसनादः सिंहनादो मल्लिकामोदसंज्ञकः ।
भवेच्छरभलीलश्च रङ्गाभरण एव च ॥ ७ ॥
ततस्तुरङ्गवि(व)ल्ली स्यात्ततस्तु सिंहनन्दनः ।
जयश्री विजयानन्दः प्रतितालो द्वितीयकः ॥ ८ ॥
मकरन्दः कीर्तितालो विजयो जयमङ्गलः ।
राजविद्याधरो मण्ठो जयतालः कुडुक्कः ॥ ९ ॥
ततो निःसारिणी क्रीडा मल्लतालश्च दीपकः ।
अनङ्गलीलो विषमो नान्दीतालो मुकुन्दकः ॥ १० ॥
एकतालश्च कङ्कालश्चतुस्तालश्च दोम्बुलिः ।
अभङ्गो रायभङ्कालस्तथैव लघुशेखरः ॥ ११ ॥
प्रतापशेखरश्चान्यो जगझम्पश्चतुर्मुखः ।
झम्पश्च प्रतिमण्ठश्च तथा तालस्तृतीयकः ॥ १२ ॥
तस्मादुपरि विज्ञेयो वसन्तललितो रतिः ।
करुणाख्यायितश्चैव पट्टतालो वर्धनस्तथा ॥ १३ ॥
ततो वर्णयतिश्चैव रायनारायणस्तथा ।
मदनश्चैव विज्ञेयः पार्वतीलोचनस्तथा ॥ १४ ॥
ततो गारुगितालः स्यात्ततः श्रीनन्दनो जयः ।
लीलाविलोकितश्चान्यो ललितप्रियमेव च ॥ १५ ॥

जनको वद्धलक्ष्मीशो रागवर्धनसंज्ञकः ।
उत्सवश्चेति तालानामेकेनाभ्यधिकं शतम् ॥ १६ ॥
तल्लक्षणं हि वक्ष्येऽहं मुनिनारद इत्यसौ ।

अथताललक्षणमाह ।

ताले चचत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुप्लुतम् ॥ १७ ॥
गुरुर्लघुर्गुरुश्चैव भवेचाचपुटाभिधे ।
पलगा गलपाश्चैव षट्पितापुत्रकस्तथा ॥ १८ ॥
मगणः स्यात्प्लुताद्यन्तं (:) संपद्वेष्टाख्यसंज्ञके ।
उद्ध(द्ध)ट्टो मगणस्त्वेक आदितोऽतिलघुः स्मृतः ॥ १९ ॥
दर्पणः स्याद्रुतद्वन्द्वं गुरुश्चैव प्रकीर्तितः ।
अष्टगुर्वङ्कचर्चर्या विरामं च द्रुतौ लघुः ॥ २० ॥
सिंहलीले विधातव्यं लघ्वाद्यन्तं द्रुतत्रयम् ।
द्रुतद्वयं –[1]कारश्च कन्दर्पे परिकीर्तितः ॥ २१ ॥
सिंहविक्रमतालस्तु मगणो लपलो गपौ ।
श्रीरङ्गसंज्ञके ताले सगणो लगपो मतः ॥ २२ ॥
रतिलीले विधातव्यं लघ्वोर्मध्ये गुरुद्वयम् ।
चत्वारो रङ्गताले स्याद्रुतौ(ता)गुरुस्ततः परम् ॥ २३ ॥
परिक्रमे द्रुतद्वन्द्वं यगणस्तदनन्तरम् ।
प्रत्यङ्गसंज्ञके ताले मगणः स्याल्लघुद्वयम् ॥ २४ ॥
लचतुष्कं विरामान्त्यं गजलीले प्रकीर्तितम् ।
लघुर्गुरुः प्लुतश्चैव त्रिभिन्ने परिकीर्तितः ॥ २५ ॥
वीरविक्रमताले तु लौ द्रुतौ च गुरुस्तथा ।
सविरामं लघुद्वन्द्वं ताले स्याद्धंसलीलके ॥ २६ ॥
वर्णभिन्नाभिधे ताले द्रुतद्वन्द्वं लघुर्गुरुः ।
राजचूडामणौ ताले द्रुतौ लश्च द्रुतौ लगः ॥ २७ ॥
रङ्गद्योतेन तालेन भगणो लप्लुतावपि ।
गपौ द्रुतौ गलो(लः)पश्च राजताले प्रकीर्तितः ॥ २८ ॥

[1] अत्र आदर्शपुस्तकेऽक्षरमेकं त्रुटितम् ।

द्विला पो गगलो(लः)पश्चसिंहविक्रीडिते लपौ ।
द्वौ द्रुतौ लो द्रुतौ चैव वनमाली गुरुस्तथा ॥ २९ ॥
गुरुर्लघुद्रुतौ गुश्च वर्णः स्याच्चतुरस्रके ।
लघुद्रुतौ लघू गश्च तिस्रवर्णः प्रकीर्तितः ॥ ३० ॥
प्रतितूर्यविरामान्त्यं मिश्राख्यो द्वादशद्रुताः ।
द्रुतो गुरुद्रुतद्वन्द्वं गद्वयं लो गुरुस्तथा ॥ ३१ ॥
रङ्गप्रदीपताले स्यात्तगणाद्गद्रुतो यदि ।
गद्रुतौ द्रुतयुग्मं च हंसनादे प्रकीर्तितः (तम्) ॥ ३२ ॥
यगणो लगुरुश्चैव सिंहनादो निरूपितः ।
ताले स्यान्मल्लिकामोदे गद्वयं लचतुष्टयम् ॥ ३३ ॥
लघुद्रुतचतुष्कं स्याल्लघुः शरभलीलके ।
तगणो लो द्रुतौ गश्च रङ्गाभरणसंज्ञके ॥ ३४ ॥
तुरङ्गलीलताले स्याद्द्रुतद्वन्द्वं लघुस्तथा ।
तपा लगद्रुतौ गालपलपालश्च लद्वयम् ॥ ३५ ॥
निपद्दं (निःशब्दं) लचतुष्कं स्यात्ताले स्यात्सिंहनन्दने ।
रगणो लगुरुश्चैव जयश्रीरिति गण्यते ॥ ३६ ॥
भवेयुर्विजयानन्दे लद्वयं गुरवस्त्रयः ।
ललितौ प्रतिताले स्याद्द्रुतौ लश्च द्वितीयके ॥ ३७ ॥
मकरन्दे द्रुतद्वन्द्वं लघुत्रयमतो गुरुः ।
लगौ पगौ लपौ गश्च कीर्तिताले प्रकीर्तितः ॥ ३८ ॥
द्रुतो गश्च द्रुतो गश्च ताले विजयसंज्ञके ।
सकारश्च सकारश्च जयमङ्गलनाम च ॥ ३९ ॥
लघुवक्रो द्रुतौ ताले राजविद्याधराभिधे ।
सकारो मण्ठताले स्यात्कल्पितं चचतुष्टयम् (?) ॥ ४० ॥
भारो रोधो गुरुद्वन्द्वं निःशब्दं मठतालके ।
अथवा नगणो जश्च लघुश्चैव प्रकीर्तितः ॥ ४१ ॥
जगणो लो द्रुतौ पश्च जयताले निरूपितः ।
द्रुतद्वयं लघुद्वन्द्वं भवेत्ताले कुडुक्कके ॥ ४२ ॥

लघुद्वन्द्वं विरामान्त्यं ताले निःसारके भवेत् ।
द्रुतद्वन्द्वं विरामान्त्यं क्रीडाताले प्रकल्पितम् ॥ ४३ ॥
चन्दनिःसारुणीताले द्रुतमेवाभिधीयते ।
सकारो गुरुलश्चैव त्रिभङ्गिरभिधीयते ॥ ४४ ॥
कोकिलप्रियताले स्यात्क्रमाद्गुरुलघुप्लुताः ।
ताले निःसारुके ज्ञेयो लघुश्चैव विधीयते(?) ॥ ४५ ॥
श्रीकीर्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ।
भकारो बिन्दवो गुर्वोर्मध्ये स्याद्बिन्दुमालिके ॥ ४६ ॥
समताले लघुद्वन्द्वं विरामान्त्यं द्रुतत्रयम् ।
तौ द्रुतौ च प्लुतस्यान्ते ताले स्यान्नन्दनाभिधे ॥ ४७ ॥
किञ्चिद्गुरुद्वयोर्मध्ये बिन्दुयुग्मं प्रचक्षते ।
उद्वीक्षणे लघुद्वन्द्वं गुरुरेकस्ततः परम् ॥ ४८ ॥
मट्टिकायां विधातव्यं गुरुर्बिन्दुः प्लुतः क्रमात् ।
विरामादि व्योमयुग्मं लद्वयं च द्विमट्टिका ॥ ४९ ॥
डिङ्कीकारङ्गणं तस्यास्तस्याः सायोजने तथा ।
कौ बिन्दू लश्च बिन्दू च विज्ञेया वर्णमण्टिका ॥ ५० ॥
लद्वयं बिन्दुयुग्मं च गुरुश्चैवाभिनन्दके ।
विधातव्यान्तरक्रीडा विरामान्त्यं द्रुतद्वयम्(?) ॥ ५१ ॥
समल्लताले द्विलघु विरामान्त्यं द्रुतद्वयम् ।
द्रुतद्वन्द्वं लघुद्वन्द्वं गुरुद्वन्द्वं च दीपके ॥ ५२ ॥
लघुप्लुतौ सकारश्च स्यादनङ्गेऽभिधीयते ।
वेदद्रुतौ विरामान्तौ द्वौ पदौ विपमद्रुतः ॥ ५३ ॥
नान्दीताले समुद्दिष्टा लघुबिन्दुर्लघुर्गुरुः ।
मुकुन्दसंज्ञिके ताले लघुर्बिन्दुर्लघुर्गुरुः ॥ ५४ ॥
अन्ये मुकुन्दलघ्वादिषड्बिन्दु लचतुष्टयम् ।
लघुद्वन्द्वं साकारेण कुडुक्कः परिकीर्तितः ॥ ५५ ॥
एकेनैव द्रुतेन स्यादेकतालेतिसंज्ञितः ।
चतुर्विधान्यकङ्कालः पूर्वखण्डसमागमः ॥ ५६ ॥

पूर्णं लघुचतुष्टेन गुरुणा लघुना क्रमात् ।
द्रुतद्वन्द्वं लघुः खण्डे गुरुद्वन्द्वं लघुः समे ॥ ५७ ॥
एको गुरुर्लघुद्वन्द्वं कङ्काले विषमे भवेत् ।
चतुस्ताले गुरुः पूर्वं ततो विन्दुत्रयं भवेत् ॥ ५८ ॥
विरामान्त्यं लघुद्वन्द्वं दोम्बुलीति प्रकीर्तितः ।
लघुमेव परं त्वन्ये कालघन्धनकाभिधे ॥ ५९ ॥
अभङ्गकालकर्तव्यं गुरुरेकं लघुप्लुतम् ।
रगणो विन्दुयुग्मेन रायभङ्काल इष्यते ॥ ६० ॥
एकेन सविरामेण लघुना लघुशेखरः ।
प्रतापशेखरेऽप्यङ्गविरामान्तं द्रुतद्वयम् ॥ ६१ ॥
झगझम्पे गुरुस्त्वेको विरामान्त्यं द्रुतत्रयम् ।
चतुर्मुखाभिधे ताले जगणो रन्तरप्लुतम् (?) ॥ ६२ ॥
व्योमद्वयं विरामान्त्यं लघु झम्पे विधीयते ।
जगणो भगणो वापि प्रतिमण्ठे बुधैः स्मृतः ॥ ६३ ॥
तालज्ञैरयमेवान्यैर्झल्लकः परिकीर्तितः ।
तृतीयताले विन्दुः स्याद्विरामान्त्यं द्रुतद्वयम् ॥ ६४ ॥
वसन्तताले कर्तव्या द्रुतद्वन्द्वं लघुर्गुरुः ।
ताले ललितसंज्ञे च द्रुतद्वन्द्वं लघुर्गुरुः ॥ ६५ ॥
रतिताले लघुः कार्यः सततस्त्वेको गुरुः स्मृतः ।
ताले करण इत्याख्ये ज्ञेयं विन्दुचतुष्टयम् ॥ ६६ ॥
पट्टतालसंज्ञके ताले विन्दुषट्कं निरन्तरम् ।
वर्धने बिन्दुयुगलं ततः कार्यो गुरुः स्मृतः ॥ ६७ ॥
वर्णमण्ठाभिधे ताले लघुद्वन्द्वं नभस्त्रयम् ।
रायनारायणे विन्दुद्वितयं जगणो गुरुः ॥ ६८ ॥
द्रुतद्वन्द्वं प्लुतश्चैको मदने परिकीर्तितः ।
पार्वतीलोचने ताले तद्द्रुतौ तगणः क्रमात् ॥ ६९ ॥
अथवा मगणो लश्च गुरुद्वन्द्वं द्रुतत्रयम् ।
गारुगे कथ्यते प्राज्ञैर्विरामान्त्यं चतुर्द्रुताः ॥ ७० ॥

श्रीनन्दनस्य तालः स्याज्जगणः द्रुत इत्यपि ।
जयके जगणश्चैव बिन्दुयुग्मं द्रुतस्तथा ॥ ७१ ॥
बिन्दुर्लघुः द्रुतश्चैव लीलाताले प्रकीर्तितः ।
विलोके च लघुर्वक्रव्योमयुग्मं ततः द्रुतम् ॥ ७२ ॥
ललितप्रियताले स्यात्सगणोऽनन्तरा लघुः ।
जनताभिधताले स्यान्नयनेभ्यः परं गुरुः ॥ ७३ ॥
बिन्दुद्वयं विरामान्त्यं लद्रुतौ रागवर्धने ।
उत्सवः कथितः प्राज्ञैर्लघोरूर्ध्वं द्रुतं लघुः ॥ ७४ ॥
एवं प्रकारः कथितो नारदेन महात्मना ।

इति श्रीनारदकृतौ सङ्गीतमकरन्दे नृत्याध्याये एकोत्तरशतताळमात्रानिर्णयो नाम द्वितीयः पादः समाप्तः ।

---

## अथ नृत्याध्याये तृतीयः पादः ।

चतुरस्रादितालानामेतानि कथितास्म्यहम्[1] ।
प्रस्तारसहितं लक्ष्म तद्भेदांश्च पृथग्विधान् ॥ १ ॥
तपोभागदयालापो पुमा पामगणेति च (?) ।
पञ्चकार्यप्रबन्धा च नन्दिकेश्वरकल्पितम् ॥ २ ॥
शब्दाडम्बरनामाख्यं तालं द्रुतचतुष्टयम् ।
द्रुतद्वयं गुरुस्तित्र आडम्बरस्ततो लघुः ॥ ३ ॥
न तालं न च वादित्रमन्त्यतालेन योचते (?) ।
मध्ये मध्ये तथा कुर्यात्तालमात्रं समन्वितम् ॥ ४ ॥
सर्वशब्दसमायुक्त अरेख इति कीर्तितः ।
सततसुरधनेशेषु (?) प्रसिद्धो नारदेन च ॥ ५ ॥

### अथ दशविधतालप्रबन्धा उच्यन्ते ।

गुरुद्वन्द्वं लघुद्वन्द्वं गुरुरेकस्त्रिभङ्गके ।
चतुर्लघुलकारश्च लद्रुतश्च चतुर्मुखे ॥ ६ ॥

---

[1] "कथयाम्यहम्" इति पाठः स्यात् ।

पञ्चतालप्रबन्धः स्याद्रुताद्यन्तं लुतश्चतुः(?)।
तमसा पञ्चलघुना पट्टतालश्च प्रकीर्तितः ॥ ७ ॥
लुतौ गुर्वो (रु)र्लघुश्चैव सुलादिरभिधीयते ।
लघुरित्युच्यते तालं गीतज्ञैः पूर्वसूरिभिः ॥ ८ ॥
अष्टमङ्गलतालः स्याद्व्योमाद्यन्तं नवद्रुतम् ।
यः लुतो गलपो लोपो(पः) समगौ नवतालके ॥ ९ ॥
षड्भञ्जनं दीर्घषट्कं गुरुद्वन्द्वं लघुत्रयम् ।
दशारूपप्रबन्धः स्यात्रिंशन्मात्रं लघुस्तथा ॥ १० ॥
धरारसतनू भौ मो लघुद्वादशबिन्दवः ।
निःशब्दो लश्च चत्वारताल एकादशो भवेत् ॥ ११ ॥
व्यञ्जनो (ने?) सरलो दीर्घद्वादशसामसम्भवम् ।
गपव्योमयुतं चैव तालः स्यादर्कमालिका ॥ १२ ॥
एतानि दशतालानि वाद्यन्ते श्रूयते नरैः ।
तत्पूर्वसर्वकार्येषु सर्वोत्कृष्टश्च जायते ॥ १३ ॥
विजयो जयमानन्दो जयश्रीर्जयमङ्गलम् ।
जयतालश्च पञ्चैते श्रुत्यं (नृत्यं) जयकरं शुभम् ॥ १४ ॥
लुतो गपो नगो राजौ जभव्योमद्वयं पुनः ।
पञ्चतालप्रबन्धः स्याच्छ्राव्यं जयकरं शुभम् ॥ १५ ॥
मदनोत्सवलक्ष्मीशक्रीडाकीर्तिस्तथा रतिः ।
सिंहलीलश्च सप्तैते मार्तण्डजपदः क्रमात् ॥ १६ ॥
चञ्चत्पुटश्चाचुपुटः षट्पितापुत्रकस्तथा ।
प्रत्यङ्गो गजलीलश्च पट्टतालश्च प्रबन्धकम् ॥ १७ ॥
ध्रुवा मठा प्रतिमठा लम्बको रासकस्तथा ।
अष्टतालश्चैकतालः सुलादीत्युच्यते बुधैः ॥ १८ ॥

## लघुसुलादिः ।

रङ्गभृतो राजतालो वनमाली त्रिधा मतः ।
त्रिभङ्गी तालवृन्दं च नारदेन यथाक्रमम् ॥ १९ ॥

एकतालश्च कङ्कालश्चतुस्तालश्च दोम्बुलिः ।
चतुर्मुखप्रबन्धं स्याच्छ्रूयते शत्रुनाशनम् ॥ २० ॥
कन्दर्पो विन्दुमाली च समतालश्च नन्दनः ।
राजविद्याधरो झम्पा विषमः कन्दुकस्तथा ॥ २१ ॥
सङ्गीतज्ञमनोरम्यमष्टमङ्गलनामकम् ।
प्रबन्धं च शृणोत्यत्र विषमग्रहमोचनम् ॥ २२ ॥
उद्घटः सिंहनादश्च अभङ्गो वीरविक्रमः ।
ततः शरभलीला च सिंहविक्रीडितो मतः ॥ २३ ॥
प्रतापशेखरश्चान्यः सिंहविक्रम एव च ।
रायनारायणो नाम नवतालप्रबन्धकम् ॥ २४ ॥
यमौ जपो लघुव्योम वक्रपापविरामजौ ।
लपो तपो लपो वक्र सपो लघुगपो लघु ॥ २५ ॥
विरामान्तं लघुद्वन्द्वं पुनस्तत्र विरामकम् ।
चतुर्विन्दु ललव्योमौ जगुरुः स्यान्नवाभिधे ॥ २६ ॥
अभिनन्दान्तरक्रीडा मलतालश्च दोम्बुलिः ।
कुडुक्कका प्रतिमठो मकरन्दश्च चर्चरी ॥ २७ ॥
परिक्रमो हंसनाद एभिस्तालैः समन्वितम् ।
दशरूपप्रबन्धं च श्रूयते कीर्तिवर्धनम् ॥ २८ ॥
नान्दी तृतीयकारस्तु लघुशेखरसंज्ञकः ।
प्रतापशेखरश्चैव तथैवानङ्गलीलकः ॥ २९ ॥
वर्णमट्टश्च चर्चर्यो वर्णतालो द्वितीयकः ।
उत्सवो मदनश्चैवमेकादश निरूपितम् ॥ ३० ॥
वनमाली राजचूडो वर्णतालः प्रदीपकः ।
रङ्गाभरण उद्घट्टो रतिकीर्तिश्च नन्दनः ॥ ३१ ॥
वीरविक्रमलक्ष्मीश उत्सवश्च ततः परम् ।
प्रबन्धमर्कमालाख्यं श्रूयते पापनाशनम् ॥ ३२ ॥

( इति दशतालः प्रबन्धः समाप्तः । )

## अङ्गतालाः क(थ्यन्ते) ।

गुरवः षोडश ज्ञेया द्वात्रिंशल्लघवः पुनः ।
चतुःषष्टिर्द्रुताश्चैव तालो यक्षपतिर्भवेत् ॥ ३३ ॥
विरामार्धार्धचन्द्रार्धमातृकात्रितयं तथा ।
व्यञ्जनं च लयं खण्डं लघुद्वन्द्वं द्रुतं ततः ॥ ३४ ॥
अनुद्रुतद्वन्द्वलघुस्तालोऽयं वाद्यविभ्रमः ।
इति सङ्गीतकैः प्रोक्तो द्रावडीदश विश्रुतः ॥ ३५ ॥
मरताले नकारः स्याद्भगणो ल ततो लगः ।
ततश्च विन्दवश्चैव कल्पितं भचतुष्टयम् ॥ ३६ ॥
पुनर्मठभकारश्च निःशब्दं च गुरुद्वयम् ।
आलापमध्ये चार्द्धेन्दुः सूरिभिश्च विरच्यते ॥ ३७ ॥
गुरुर्बहुकलायुक्ता प्लुतयुग्मं ततः परम् ।
ब्रह्मताले भवेत्तत्र नारदस्य मतं यतः ॥ ३८ ॥
प्लुतमेकं लघुद्वन्द्वं निःशब्दो लत्रयं भवेत् ।
द्रुतमल्प(?) मया प्रोक्तो लघून्याख्यो निरूपितः ॥ ३९ ॥
गीतझम्पाख्यके ताले व्यञ्जनं द्रुतमिश्रलः ।
वाद्यं झम्पा विरामान्त्यं द्रुतद्वन्द्व च वन्धनम् ॥ ४० ॥
ब्रह्माण्डतालेऽनुद्रुतो द्रुतसाल्यं ह्यकल्पनम् (?)[1] ।
पद्रुतास्त्वर्धविन्दुश्च लघुश्चैव द्रुतद्वयम् ॥ ४१ ॥
तद्भेदविन्दुलश्चैव ततो मिश्रलघुद्वयम् ।
द्रुतद्वयं विरामान्त्यं रायकोलाहलः स्मृतः ॥ ४२ ॥
द्रुतत्रयं लघुद्वन्द्वं त्रिरावृत्ता भका ततः ।
मातृकाद्वितयं चैव तालः प्रोक्तो महाशनिः ॥ ४३ ॥
अव्यक्तं व्यञ्जनं विन्दु तिस्रो लघुः पुनः पुनः (?) ।
व्यञ्जनं वलयं द्वन्द्वमव्यक्तं तिस्रलस्तथा ॥ ४४ ॥
तिस्रलो व्यञ्जनो विन्दु(ः) तिस्रमात्रैकमेव च ।
तिनाभेरिरिति प्रोक्तो वाद्यविद्याविशारदैः ॥ ४५ ॥

१ °द्रुतसायन्लकल्पनं° इति स्यात् ।

गगनिःशब्दलघ्वेकद्वितीयं लगलद्रुतम् ।
नगलो द्वौ द्रुतं दीर्घं यगणो लघलः स्मृताः ॥ ४६ ॥
गुरवः सप्त विज्ञेयाः सरलानि च षोडश ।
द्रुता विंशतिराख्यातास्तालो वाद्यगजाङ्कुशः ॥ ४७ ॥

## (अथ) तालशब्दनिष्पत्तिः ।

तालशब्दस्य निष्पत्तिः प्रतिष्ठार्थेन धातुना ।
गीतं वाद्यं च नृत्यं च भाति ताले प्रतिष्ठितम् ॥ ४८ ॥
संयोगे च वियोगे च वर्तते च तयोर्द्वयोः ।
स्थापितोऽपि दश प्राणैः स कालस्तालसंज्ञिकः ॥ ४९ ॥
शिवशक्त्यात्मकं पुण्यं यशस्यं भुक्तिमुक्तिदम् ।
दशप्राणात्मकं तालं यो जानाति स तत्त्ववित् ॥ ५० ॥
कालमार्गक्रियाङ्गानि ग्रहजातिकलालयाः ।
यतिप्रस्तारकं चैव तालप्राणा दश स्मृताः ॥ ५१ ॥

## अथ काललक्षणम् ।

उपर्युपरि विन्यस्य पद्मपत्रशतं सकृत् ।
स कालः सूचिसंभेदात्तत्क्षणस्य कलं प्रति ॥ ५२ ॥
लवः क्षणैरष्टभिः स्यात्काष्ठा चाष्टलवात्मिका ।
अष्टकाष्ठा निमेषः स्यान्निमेषैरष्टभिः कला ॥ ५३ ॥
ताभ्यां चैव चतुर्भागचतुर्भानामनुद्रुतः(?) ।
अनुद्रुताभ्यां बिन्दुश्च बिन्दुभ्यां तु लघुर्भवेत् ॥ ५४ ॥
लघुद्वन्द्वं गुरुश्चैव त्रिलघु प्लुतमुच्यते ।
इतिमानगतिः प्रोक्ता तालज्ञैः पूर्वसूरिभिः ॥ ५५ ॥

## अथ मार्गलक्षणम् ।

दक्षिणो वार्तिकश्चैव तथा चित्रचिचित्रकः ।
तथा चित्रतरस्तु स्यादतिचित्रतरो मतः ॥ ५६ ॥

षड्वः कथितो मार्गस्तस्य रूपं निरूप्यते ।
एतदेव नारदस्य मतमिष्टं यथाक्रमम् ॥ ५७ ॥
अष्टमात्रा कला ज्ञेया मार्गे दक्षिणसंज्ञके ।
वार्तिकस्य तु चतुर्मात्रा कला चित्रा द्विमात्रिका ॥ ५८ ॥
द्रुता चित्रतरे तस्या लघुश्चित्रतरो मतः ।
अतिचित्रतरो मार्गकलाश्च द्रुतसंज्ञिकः(?) ॥ ५९ ॥

## मात्रालक्षणम् ।

लघ्वक्षराणां पञ्चानां मानमुच्चारणे हि तत् ।
तत्प्रमाणं परिज्ञेयं मार्गस्तालस्ततो बुधैः ॥ ६० ॥
मार्गदेशीगतत्वे च तत्राद्यस्य क्रिया द्विधा ।
तद्विधं कथयिष्यामि नारदो मार्गलक्षणी (णम्) ॥ ६१ ॥
तत्र चोवादनिष्क्रामं विक्षेपं च प्रवेशनम् ।
चतुर्विधं च कल्पेत निःशब्दः कथितो बुधैः ॥ ६२ ॥
शम्पतालो द्रुतश्चैव संनिपातस्तथा परम् ।
सशब्देन च संयुक्तो विज्ञेयश्च चतुर्विधः ॥ ६३ ॥
सर्वाङ्गुलिसमाक्षेप ओपाद इति कीर्तितः ।
निष्क्रामोऽथ गतिस्तस्या अङ्गुलीनां प्रसारणम् ॥ ६४ ॥
तस्य दक्षिणतः कालो विक्षेप इति कथ्यते ।
विवर्णनं च हस्तस्य प्रवेशोऽधोमुखस्य च ॥ ६५ ॥
तस्य हस्तनिपातस्तु शम्पतालस्तु वामतः ।
हस्तयोरुभयोर्घातौ संनिपातद्रुतौ स्मृतौ ॥ ६६ ॥
एतदष्टप्रकारास्तु मार्गभेदा विवक्षिताः ।
तत्रा(त्र)द्वित्रिचतुरकलासु प्रतियोगितः (नः) ॥ ६७ ॥

## अथ देशीक्रिया ।

देशीयोग्यं (ग्यान्) प्रवक्ष्यामि व्यापारान् ध्रुवकादिकान् ।
ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्पिका ॥ ६८ ॥

---

१ °षड्विधः कथि° इति शुद्धः पाठः स्यात् । २ °चावाप° इति शुद्धः पाठः स्यात् । ३ °आवाप° इति शुद्धः पाठः स्यात् ।

विक्षिप्ताख्या पताकाख्या मातृका त्वरिताष्टमी ।
अमात्राणि ( पि ) विज्ञेया कथितं नारदेन च ॥ ६९ ॥
सशब्दो ध्रुवका ज्ञेया सर्पिणी वामगामिनी ।
कृष्या दक्षिणतः पातः पद्मिनी स्यादधोगता ॥ ७० ॥
विसर्पिका बहिर्याता विक्षिप्ता कुलजात्मिका ।
पताका चोर्ध्वगमना पतिता करपालना ॥ ७१ ॥

## दक्षिणमार्गमात्रानामानि ।

ध्रुवका सर्पिणी चैव पताका परिकथ्यते ।
चतुर्मात्रा कला ज्ञेया वार्तिकेऽपि न योजयेत् ॥ ७२ ॥
ध्रुवकापतिते चित्रसरिचित्रादिकान् द्रुतान् (?) ।
अनेनैव प्रकारेण कालमार्गक्रिया भवेत् ॥ ७३ ॥

## अथ अङ्गानि ।

अनुद्रुतो द्रुतश्चैव लघुर्गुरुस्ततः परम् ।
प्लुतश्चेति क्रमेणैव तालाङ्गानि च पञ्चधा ॥ ७४ ॥
द्रुतस्य देवता शम्भुर्लघोश्चाद्रिपतेः सुता ।
गौरी च श्रीश्चापि गुरोः प्लुते ब्रह्मादयस्त्रयः ॥ ७५ ॥

## अथ ग्रहाः ।

ग्रहास्त्रिधा [1]समा नीतास्तथानागत इत्यपि (?) ।
तल्लक्षणं च वक्ष्यामि नारदो मुनिपुङ्गवः ॥ ७६ ॥
नि[2]र्कोतीते त्वतीतस्य तालातीते त्वनागतः ।
समः समग्रहः प्रोक्तस्तालज्ञैः पूर्वसूरिभिः ॥ ७७ ॥

## अथ जातिः कथ्यते ।

[3]चतुरस्रस्तिसमिपस्तालं खंखाभिधे तथा (?) ।
चतुर्विधो भवेत्तालस्तत्स्वरूपं निरूप्यते ॥ ७८ ॥

---

१ °समो नीतस्तथा° इति शुद्धः पाठः स्यात् । २ °नीतोऽतीते° इति पाठः शुद्धः स्यात् । उद्देशे ( श्लो. ७६ ) 'नीतः' इत्येव पाठदर्शनात् । ३ 'चतुरस्त्रस्त्रिस्रमिश्रस्तालः खण्डाभिधस्तथा' इति शुद्धः पाठः स्यात् ।

द्रुताद्यः क्रमाद्यत्र यतिः स्रोतोवहा मता ।
गोपुच्छा इति विज्ञेया द्रुतादीनां विपर्ययात् ॥ ८८ ॥

अथ प्रस्तारः ।

अन्येऽपि सन्ति[1] भूयिष्ठास्तालास्ते लक्ष्यवर्त्मनः ।
प्रसिद्धविधिर[2]त्रैव शास्त्रेऽस्मिन्प्रतिपादितः ॥ ८९ ॥
तथेति[3] तत्क्रयार्थं तु (?) लघूपाया भवन्त्यमी ।
प्रस्तार[4]सङ्ख्या नष्टं चोद्दिष्टं पातालकस्तथा ॥ ९० ॥
द्रुतमेरुर्लघुमेरुर्गुरुमेरुः प्लुतस्य च ।
मेरुः संयोगमेरुश्च खण्डप्रस्तारकं तथा ॥ ९१ ॥
प्राचां चतुर्णां मेरूणां नष्टोद्दिष्टं पृथक् पृथक् ।
एकोनविंशतिरिति [5]प्रतिस्थानं ब्रुवेऽधुना ॥ ९२ ॥

प्रस्तारो यथा—

[6]न्यस्याल्पमध्यमहतोऽधस्ताक्षेपं यतोपरि (?) ।
प्रागूने [7]वामधःस्थाप्यं संभवे महतो लिखेत् ॥ ९३ ॥
अल्पानसंभवे तालपूर्त्यै भूयोऽप्ययं विधिः ।
सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ ॥ ९४ ॥
प्लुतो व्यस्ते नन्यते च चाक्षराणि चतुर्विधम् (?) ।
संज्ञया तत्परिज्ञेयं प्लुतं लघुगुरुप्लुतम् ॥ ९५ ॥
प्रत्येकं तु प्लुतादीनां भवेत्कार्यसपञ्चकम् (?) ।
अनुद्रुतमर्धचन्द्रं व्यञ्जनं चारु नासिकम् ॥ ९६ ॥
अव्यक्तं चेति पञ्चैते पर्यायाख्यमनुद्रुते ।
अर्धमात्रद्रुतं व्योम वलयं विन्दुके द्रुतम् ॥ ९७ ॥

---

१ °भूयांसस्तालास्ते लक्ष्यवर्त्मनि° । इति सङ्गीतरत्नाकरे पाठो दृश्यते । २ °प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्न प्रदर्शिताः° । इति पाठः सङ्गीतरत्नाकरे । ३ °तद्भेदप्रत्ययार्थं तु लघू° इति पाठः सङ्गीतरत्नाकरे । ४ °प्रस्तारसङ्ख्ये न° इति पाठः सङ्गीतरत्नाकरे । ५ °प्रत्ययार्थं ब्रुवेऽधुना° इति सङ्गीतरत्नाकरपाठः । ६ 'न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि' इति सङ्गीतरत्नाकरे । ७ °प्रागूने वामसंस्थास्तु संभवे° इति सङ्गीतरत्नाकरे ।

समध्वनिसमायुक्तं श्रूयते पुत्रवर्धनम् ।
राज्याभिवृद्धिरतुलं रणे शत्रुपलायनम् ॥ ८ ॥
एकमेकं भिन्नरूपं ध्वनिं यत्र शृणोति यः ।
शिवनादे भवेद्व्याधिः शक्त्या दारिद्र्यमाप्नुयात् ॥ ९ ॥

( इति मृदङ्गलक्षणम् । )

अरेखा सारिणी चैव सम्प्रसारी ततः परम् ।
समगैकैव कैवालं हस्तसंयुक्तमेव च ॥ १० ॥
अरेखा सम्पुटीयुक्ते पुरोदृष्टिमवेक्षते ।
सारिणीं दक्षिणभुजे करौ खण्डयुतौ द्रुतौ ॥ ११ ॥
प्रसारिणी वामभुजे हस्ते हस्तकनिष्ठिके ।
अङ्गुली कङ्कणाभावे वेष्टितावग्र आन्त्यकौ ॥ १२ ॥
समगैकेति विख्याता हस्तौ वामस्तने धृतौ ।
कैवालं दक्षिणकुचे लग्नौ चूचुकदर्शनम् ॥ १३ ॥
चतुरं च कुवलं च धृतहस्तमनूरणम् ।
परिक्रमं च पञ्चैते चासंयुतमतं विदुः ॥ १४ ॥
चतुरं कमलं हस्तमुत्तलपार्श्वदक्षिणे ।
वामे पताकवद्भुत्ता चलनं च कुवालकम् ॥ १५ ॥
कनिष्ठाङ्गुलिमुचेन वलये धृतहस्तकम् ।
समपादललौ दृष्टिपार्श्वेकैककरो मतः ॥ १६ ॥
ससर्पफणिपद्मेन ऊर्ध्वान्तलपुरो यदि ।
दक्षिणे कटिन्यस्तं च करोति च मनूरणम् ॥ १७ ॥
वामपार्श्वे तु वलयं हस्तं यत्र करोति सः ।
तर्जन्यङ्गुष्ठकं रन्ध्रं परिक्रममुदीरितम् ॥ १८ ॥
कुरुडायी चित्रतरं तथा चित्रकलीति च ।
घनरवं नागवन्धं चक्रभ्रमरिका तथा ॥ १९ ॥
अतिचक्रभ्रमरी विधूतभ्रमरिका ततः ।
अष्टभ्रमरिकाण्येव नारदेन विचर्चिता ॥ २० ॥

कुरुडायी शिरोभ्राम्यं स्थितं दक्षिणपार्श्वके ।
पार्श्वे दृष्टिर्विपपदा उच्चोच्चगमनं ततः ॥ २१ ॥

शिरोभ्रमणम् ।

वामे कटिभ्रमणकं विक्षेपं पा····णे ।
वामस्कन्धं च दृष्टिं च स्थाप्यचित्रकुली तथा ॥ २२ ॥
भ्रमणं दक्षिणकटे (टौ) पादं विक्षिप्य वामके ।
वामस्कन्धे दृष्टिं···· घनरवं भ्रमणं च तत् (?) ॥ २३ ॥
शिरोभ्रमणकं कृत्वा स्कन्धमध्ये निवेदयेत् ।
समदृष्टिः समगतिर्नागवन्धं कराङ्गुलिम् ॥ २४ ॥
कट ऊर्ध्वं भ्रमणकं कटे लग्नं तु वामकम् ।
वामपार्श्वे तु गमनं चक्रभ्रमरिका भवेत् ॥ २५ ॥
सदैव भ्रमणं कुर्याद्धस्तौ दक्षिणकट्यपि (?) ।
निवेश्य दक्षिणगतिरतिभ्रमरकं भवेत् ॥ २६ ॥
सर्वाङ्गभ्रमणं कुर्यात्समदृष्टिरधो द्वयोः ।
मध्ये मध्ये च नटनं धूतभ्रमरिका भवेत् ॥ २७ ॥
वोटावणी चिगुरुश्च समगात्रं यथाक्रमम् ।
वीरगात्रं विषमकमर्धगात्रं तथैव च ॥ २८ ॥
वीरगात्रफणीवालं चिटियोटवणिस्तथा ।
शिरांसि नवसङ्ख्यानि नारदस्य मतानि तु ॥ २९ ॥
उन्नतं च शिरः कृत्वा भ्रूविक्षेपश्च वीक्षकैः ।
उद्धृतौ च करौ कृत्वा चलनं वोटवेणिकम् ॥ ३० ॥
वामहस्ते शिरः स्थाप्य (?) कटाक्षैर्वीक्षितो गतिः ।
मध्ये मध्ये च गमकं चिगुरुः कथ्यते बुधैः ॥ ३१ ॥
तथैव दक्षिणे हस्ते स्थापयेच्च शिरो दृशः ।
मध्यमध्ये विरामं च समगात्रमिति स्मृतम् ॥ ३२ ॥

---

१ अस्मादर्शपुस्तके त्रीण्यक्षराणि त्रुटितानि । २ अत्रादर्शपुस्तके द्वे अक्षरे लुप्ते ।

अधोदृष्टिशिरःपातवदनं चिहृतालुकम् (?) ।
[१]..................तं वरगात्रमिति स्मृतम् ॥ ३३ ॥
अर्धपार्श्वगतिं शीर्षं वक्रकटिसमन्वितम् ।
वामहस्तेऽङ्गुलितटं कटकं विषगात्रकम् ॥ ३४ ॥
अर्धगात्ररञ्जिशिरः पुरोहस्तौ कटीतटौ ।
धृत्वा रञ्जितसर्वत्रनृत्यं नृत्यं च कोहलम् ॥ ३५ ॥
तथैव वामजङ्घोरु शिरो निक्षिप्य दृष्टयः ।
गमनं च फणीवालं [२]........भवेत्तथा ॥ ३६ ॥
अन्तःशिरो बाह्यशिरो(रः) ऊर्ध्वाधो बाहुकुट्टनम् ।
भ्रमति भ्रम्यचतुरो विटभादावणिक्रमम् ॥ ३७ ॥
चित्रं चैवातिचित्रं च विन्दन्ति सम एव च (?) ।
चत्वारश्चरणा भेदाः कथिता नारदेन च ॥ ३८ ॥
वक्रपादाङ्गुलीरम्यं नटभावं विनिर्दिशेत् ।
नीचोच्चगमनं कुर्याच्चित्रलक्षणमुच्यते ॥ ३९ ॥
उभौ पादाङ्गुली वक्रौ (क्रे) कृत्वा गमनमादिशेत् ।
मध्ये भ्रमणकं कुर्यादतिचित्रं वदन्ति च ॥ ४० ॥
पादमालाङ्गुलौ गम्यमधोहस्तौ कृतौ नटः ।
अर्धपार्श्ववक्रभेदं भवेद्विदन्ति तालगाः ॥ ४१ ॥
समपादौ समा दृष्टिः समचारीकृतान्विताः ।
समभ्रमणनटनः सममित्युच्यते बुधैः ॥ ४२ ॥
त्रयस्त्रिंशन्नटीभावाः सर्वदेशेषु संमताः ।
सर्वशास्त्रसमा भावाः कथिता नारदेन च ॥ ४३ ॥

इति श्रीनारदकृतौ सङ्गीतमकरन्दे नृत्ताध्याये हस्तकप्रकरणं नाम
चतुर्थपादः समाप्तः ॥

इति सङ्गीतमकरन्दः समाप्तः[३] ।

---

१ अत्रादर्शपुस्तके सप्ताक्षराणि लुप्तानि । २ अत्रादर्शपुस्तके चत्वार्यक्षराणि त्रुटितानि ।
३ इतोऽग्रे आदर्शपुस्तके लेखकेन आदर्शपुस्तकलेखनकालः स्वाभिधानादिकं च निरूपितं यथा—
"शके १५९९ शालिवाहे पिङ्गलनामवत्सरे आश्विनमासे शुक्लपक्षे विजयदशम्यां विद्यापुरमहानगरे
श्रीमन्महागणपतिदासकृष्णाजीदत्तेनेदं सङ्गीतमकरन्दाख्यपुस्तकं लिखितम् । महागणपतिर्जयति" ॥

# परिशिष्टम् १

## श्रुतीनां संख्यानामशुद्धविकृतस्वरप्रदर्शकतालिका ।

| श्रुतिसङ्ख्या | श्रुतिनामानि | शुद्धस्वर-नामानि | शुद्धस्वर-श्रुतिसंख्या | विकृतस्वरनामानि | विकृतस्वरगत-श्रुतिसंख्या |
|---|---|---|---|---|---|
| १ | तीव्रा | ० | ० | कैशिकनिषादः | त्रिश्रुतिकः |
| २ | प्रभावती | ० | ० | काकलीनिषादः | चतुःश्रुतिकः |
| ३ | कान्ता | ० | ० | च्युतषड्जः | द्विश्रुतिकः |
| ४ | सुप्रभा | षड्जः | चतुःश्रुतिकः | अच्युतषड्जः | ० |
| ५ | शिखा | ० | ० | ० | ० |
| ६ | दीप्तिमती | ० | ० | ० | ० |
| ७ | उग्रा | ऋषभः | त्रिश्रुतिकः | ० | ० |
| ८ | ल्हादी | ० | ० | विकृतर्षभः | चतुःश्रुतिकः |
| ९ | निर्विरी | गान्धारः | द्विश्रुतिकः | ० | ० |
| १० | दिरा | ० | ० | साधारणगान्धारः | त्रिश्रुतिकः |
| ११ | सर्पसहा | ० | ० | अन्तरगान्धारः | चतुःश्रुतिकः |
| १२ | क्षान्तिः | ० | ० | च्युतमध्यमः | द्विश्रुतिकः |
| १३ | विभूतिः | मध्यमः | चतुःश्रुतिकः | अच्युतमध्यमः | ० |
| १४ | मालिनी | ० | ० | ० | ० |
| १५ | चपला | ० | ० | ० | ० |
| १६ | बाला | ० | ० | त्रिश्रुतिपञ्चमः, कैशिकपञ्चमो वा | त्रिश्रुतिकः |
| १७ | सर्वरत्ना | पञ्चमः | चतुःश्रुतिकः | ० | ० |
| १८ | शान्ता | ० | ० | ० | ० |
| १९ | विकलिनी | ० | ० | ० | ० |
| २० | हृदयोन्मलिनी | धैवतः | त्रिश्रुतिकः | ० | ० |
| २१ | विसारिणी | ० | ० | विकृतधैवतः | चतुःश्रुतिकः |
| २२ | प्रसूना | निषादः | द्विश्रुतिकः | ० | ० |

# परिशिष्टम् २

प्राचीनसंगीतग्रन्थानां ग्रन्थकाराणां च नामावली जिज्ञासुबोधार्थमत्र प्रकाशिता । तत्र ये ग्रन्था मुद्रितास्तेषां नामानि नक्षत्रचिह्नेन दर्शितानि ।

| ग्रन्थनामानि | ग्रन्थकर्तृनामानि |
|---|---|
| अनूपसंगीतविलासः | भावभट्टः |
| अभिनयमुकुरम् | ... ... |
| अभिनवभरतसारसंग्रहः | मुम्मडिचिक्कभूपालः |
| अर्जुनभरतम् | अर्जुनः |
| अष्टोत्तरशततालक्षणम् | ... ... |
| आदिभरतम् | भरताचार्यकृतम् |
| आनन्दसञ्जीवनम् | राजा मदनमालः |
| औमापत्यम् | उमापतिः |
| कल्पतरुः | गणेशदेवः |
| गीतालङ्कारः | अनन्तनारायणः |
| तालदशप्राणदीपिका | गोविन्दः |
| तालदीपिका | ढिप्पभूपालः |
| तालप्रस्थम् | ... ... |
| तालप्रस्तारः | ... ... |
|ताललक्षणम् | नन्दिकेश्वरः |
| तालादिलक्षणम् | ... ... |
| तालाभिनयलक्षणम् | नन्दिकेश्वरः |
| ध्रुवपदटीका | भावभट्टः |
| नर्तननिर्णयः | पुण्डरीकविट्ठलः |
| नाददीपिका | भट्टाचार्यः |
| नारदी शिक्षा | नारदः |
| नृत्तरत्नावली | गणपतिदेवसेनः |
| नृत्याध्यायः | अशोकमल्लः |
| पञ्चमसारसंहिता | नारदः |
| *भरतनाट्यशास्त्रम् | भरतमुनिः |
| भरतभाष्यम् | न्यायदेवः |
| भरतलक्षणम् | ... ... |
| भरतशास्त्रम् | रघुनाथः |
| भरतशास्त्रसङ्गीतम् | ... ... |

| ग्रन्थनामानि | ग्रन्थकर्तृनामानि |
|---|---|
| भरतसारसङ्ग्रहः | चन्द्रशेखरः |
| मतङ्गभरतम् | लक्ष्मणभास्करः |
| मुक्तावलिप्रकाशिका | ... ... |
| मुरलीप्रकाशः | भावभट्टः |
| मेलाधिकारलक्षणम् | ... ... |
| रागकौतूहले नृत्यप्रकरणम् | रामकृष्णभट्टः |
| रागचन्द्रोदयः | विमलः |
| रागतत्त्वविबोधः | श्रीनिवासः |
| रागध्यानादिकथनाध्यायः | ... ... |
| रागनिरूपणम् | नारदः |
| रागप्रस्तारः | ... ... |
| *रागमञ्जरी | पुण्डरीकविट्ठलः |
| रागमाला | पुडरीकविट्ठलः |
| रागमाला रत्नमाला वा | क्षेमकर्णः |
| रागरत्नाकरः | गन्धर्वराजः |
| रागलक्षणम् | ... ... |
| रागविचारः | श्रीरामः |
| *रागविबोधः | सोमनाथः |
| रागविवेकः | ... ... |
| रागादिस्वरनिर्णयः | रघुनाथदासप्रसादः |
| रुद्रडमरुभवसूत्रविवरणम् | ... ... |
| वीणावाद्यलक्षणम् | ... ... |
| वीरपराक्रमः | वासुदेवः |
| श्रुतिभास्करः | भीमदेवः |
| षड्रागचन्द्रोदयः | ... ... |
| सप्ताङ्गलक्षणम् | ... ... |
| *षड्रागचन्द्रोदयः | पुण्डरीकविट्ठलः |
| सङ्कीर्णरागाध्यायः | ... ... |
| सङ्गीतकल्पतरुः | ... ... |
| सङ्गीतचिन्तामणिः | कमललोचनः |
| सङ्गीतदर्पणम् | हरिवल्लभः |
| *सङ्गीतदर्पणम् | दामोदरः |
| सङ्गीतदामोदरः | शुभङ्करः |
| सङ्गीतदीपिका | निम्बभूपालः |

| ग्रन्थनामानि | ग्रन्थकर्तृनामानि |
|---|---|
| सङ्गीतनारायणः | ... ... |
| सङ्गीतनारायणः | पुरुषोत्तममिश्रः |
| सङ्गीतपाठः | ... ... |
| *सङ्गीतपारिजातः | अहोबलः |
| सङ्गीतपुष्पाञ्जलिः | ... ... |
| *सङ्गीतमकरन्दः | नारदः |
| सङ्गीतमकरन्दः | वेदः |
| सङ्गीतमीमांसा | कुम्भकर्णमहीमहेन्द्रः |
| सङ्गीतमुक्तावली | देवानाचार्यः |
| ,, ,, | देवेन्द्रः |
| सङ्गीतमेरुः | कोहलः |
| सङ्गीतरत्नमाला | ... ... |
| *सङ्गीतरत्नाकरः | श्रीशार्ङ्गदेवः |
| सङ्गीतरत्नावली | सोमदेवपरमर्दी |
| *सङ्गीतरत्नकरटीका | कल्लिनाथः |
| * ,, ,, ( अध्याय १ ) | सिंहभूपालः |
| ,, ,, | कुम्भकर्णनरेन्द्रः |
| ,, ,, ( हिंदीभाषा ) | गङ्गारामः |
| ,, ,, | हंसभूपालः |
| सङ्गीतराघवः | चोमभूपालः |
| सङ्गीतराजः | कुम्भकर्णः |
| सङ्गीतविनोदः | ... ... |
| सङ्गीतवृत्तरत्नाकरः | विठ्ठलः |
| सङ्गीतशिरोमणिः | ... ... |
| सङ्गीतसमयसारः | पार्श्वदेवः |
| सङ्गीतसमयसारः | ... ... |
| सङ्गीतसर्वार्थसारसङ्ग्रहः | ... ... |
| सङ्गीतसारामृतम् | तुलजेन्द्रः |
| सङ्गीतसारावली | ... ... |
| सङ्गीतसारोद्धारः | हरिभट्टः |
| सङ्गीतसुधा | ... ... |
| सङ्गीतसुधाकरः | सिंहभूपालः |
| सङ्गीतसुधाकरः | हरिपालः |
| सङ्गीतसुन्दरः | सदाशिवदीक्षितः |
| सङ्गीतसुधामृतम् | तञ्जावरनिवासि भोसले इत्युपाह्वतुलजिमहाराजः |

| ग्रन्थनामानि | ग्रन्थकर्तृनामानि |
|---|---|
| सङ्गीतसेतुः | गङ्गारामः |
| सङ्गीतामृतम् | कमललोचनः |
| सङ्गीतोपनिषत् | सुधाकलशः |
| सारसंहिता | नारदः |
| स्वरप्रस्तारः | ... ... |
| स्वरमञ्जरी | ... ... |
| स्वरमेलकलानिधिः | ... ... |
| *स्वरमेलकलानिधिः | रामामात्यः |
| *हृदयप्रकाशः | हृदयनारायणदेवः |
| *हृदयकौतुकम् | हृदयनारायणदेवः |

---

# Additional List of Sanskrit Works on Music

(Supplied by the Central Library, Baroda, as found in several Mss.-Catalogues and Reports.)

## Dr. Bhandarkar's Report 1887-91.

१. संगीतरागकल्पद्रुम.

## India office Library Catalogue-Tawney & Thomas.

२. संगीतनारायण. by नारायण.

## *Buhler's Catalogue-Gujarat, Kathiawad, etc.*

३. संगीतरत्नाकर. *by* सारगदेव *(as distinguished from* शार्ङ्गदेव *which is also mentioned in the same place )*

४. संगीतोपनिषत्सार.

## Oudh Catalogue.

५. संगीतसुधा. by भीमनारीन्द्र.

६. सगीतनृत्य. ,, शारंगदेवसूरि.

७. सगीतनृत्ताकर. by भरताचार्य.

## Bodleian Library Catalogue.

८. हृत्स्वररत्नावली. by राघव.

## India office Catalogue-Pt. 2-Eggeling.

९.ताललक्षण. by कोहलाचार्य.

## Oppert's List.

१० सगीतसुधाकर. (सगीतरत्नाकरव्याख्या) by सिंगभूपाल

## Tanjore Catalogue-Burnell.

११ दत्तिलकोहलीयम् by दत्तिलकोहल
१२ अभिनयदर्पण ,, नंदिकेश्वर
१३ वाद्यव्यहस्तलक्षण.
१४. हस्तलक्षण.
१५ अभिनयलक्षण
१६ भरतार्णव by सुमति (Condensed from नंदिकेश्वर's भरतार्णव)
१७ नाट्यलक्षण
१८ भरतीयनाट्यलक्षण
१९. पादवित by तुडिव्यास
२० कीर्तन
२१ राघवप्रबंध

## Mysore & Coorg Catalogue-Rice.

२२. नंदिभरत. by नन्दी

## Mysore Catalogue.

२३. सगीतपद्यावली.
२४. अभिनयप्रकरण. (शिवतत्वरत्नाकरांतर्गत)
२५ सगीतचूडामणि. by हरिपालमहीपति.
२६ सगीतलक्षणदीपिका by गौरणार्य
२७ सगीतलक्षण
२८ सगीतसारसग्रह by पार्श्वदेव

## Central Library, Baroda.

२९ सगीतचूडामणि by कविचक्रवर्ति
३० मानकौतूहल (सङ्गीर्णाध्याय only) in हिंदी
३१ भावप्रकाशन by शारदातनय
३२ मानमनोरंजन by मयाशंकर
३३. सगीतराज by कुम्भकर्ण—
which is a सगीतमीमांसा of 16,000 granthas consisting of five Ratnakos'as (1) पाठ्यरत्नकोश (2) गीतरत्नकोश (3) वाद्यरत्नकोश (4) नृत्यरत्नकोश (5) रसरत्नकोश, of which No 2 consisting of about one third of the work is yet to be secured

## Rajendralal Mitra's Notices of Sanskrit Mss.

३४. रागमाला. by जीवराजदीक्षित.

## Bikaner Catalogue.

३५. सुबोधिनी. (कल्पतरुव्याख्या) by गणेशदेव.

३६. संगीतसार.

३७. संगीतरत्नाकर. by बूनरक son of लक्ष्मणाचार्य.

## Madras Oriental Library.

३८. अभिनयशास्त्र. by कोहल.

३९. स्वररागसुधारस. (तालदशप्राणप्रकरण) तेलगूभाषांतरसहित.

४०. नाट्यचूडामणि. by सोमनार्य.

४१. भरतार्थचंद्रिका. by नंदिकेश्वर.

४२. मृदंगलक्षण.

४३. रागवर्णनिरूपण.

४४. रागसागर.

४५. संगीतरत्नाकर. (आंध्रभाषाटीकासहित)

Mr. T. C. Krishnaswami Iyer of Mylapore gave the following names in the "Hindu" of *Madras*:—

## Miscellaneous

४६. संगीतरत्न. } Both by राधामोहन सेन.
४७. संगीतरंग. }

४८. नाटकदर्पणसूत्र.

४९. संगीतसूत्रधार. by हरिजीवनप्राज्ञणिक.

५०. संगीतसूत्र by मनोमधघनदि (ति?) (Probably मम्मट).

५१. संगीतकौमुदी by नारायण.

५२. अष्टमातृकाप्रबन्ध.

५३. गीतप्रकाश.

५४. हस्तमुक्तावलि.

# सङ्गीतमकरन्दग्रन्थस्थानां पारिभाषिकादिशब्दानां वर्णानुक्रमणी।